नानैपुण्यं चेत्युभयमपि निदर्शितेषु मन्त्रेषु कविकाव्यशब्दाभ्यां तत्र तत्र विवक्षित-मासीत्। विशिष्टकृतिमत्सु विशिष्टप्रज्ञेषु च तुल्यमेव कविशब्दः प्रायुज्यत, परं कालक्रमेण विशिष्टकृतिषु तद्व्यवहारो विरलतां गतो विलुप्तो वा, विशिष्टप्रज्ञेषु तु प्रवृत्त इति पुराणादिषु विशिष्टप्रज्ञविद्वद्बोधकमेव कविशब्दं पश्यामः।

ततोऽप्यनन्तरं तु विद्वत्सामान्येऽपि प्रवृत्तिर्निरुद्धा, विद्वद्विशेषेष्वेव तु शब्दयोजनानिपुणेषु प्रवृत्तः प्रवाहः। अर्थयोजनानैपुण्यात्प्रत्यावृत्तः प्रवाहः शब्दयोजनानैपुण्य एव प्रसृत इति नैपुण्यविशेष एव सङ्कोचमाप कविशब्दः। नेदमाश्चर्यस्थानम्। दृश्यते हि बहूनां शब्दानां विशेषबोधकानां सामान्यार्थवाचकतापरिणतिः। यथा अनुकूल-प्रतिकूल-कुशल-तैल-लावण्यादिशब्दानाम्। बहूनां सामान्यबोधकानां विशेष एव निरूढिः। यथा—योग-तप-स्वर्ग-देवत-शब-लिङ्गादिशब्दानाम्। तथैव पूर्वं सामान्ये प्रवृत्तः कविशब्दः क्रमेण विशेषपरतामासदत्। इदानीं तु विशेषादतिविशेषपरत्वेन परिणतिक्रमात्तस्य शब्दस्यास्य दुर्दशाऽवलोक्यते यज्जगन्नियन्तरि जगदीश्वरे प्रधानेषु दैवतेषु प्रतिभामेधा-ढ्येषु महर्षिषु चासीदस्य प्रवृत्तिः सोयमद्योदरदरीपरिपूरणाय तत्तत्सामन्तस्तुत्ये कपरेषु चाटुशतकुशलेष्वेव पर्यवतिष्ठते। राजपुत्रप्रान्ते हि चारण भाटेतिप्रसिद्धानां जातीनां पुरुषा एव कतिचिदक्षरयोजका प्राकृतयोजनापाठका वा 'कविजी' 'कवजी' इति सम्बोध्यन्ते। त एव च शब्देनानेन बुध्यन्त इत्यास्तामवन्तुद-वृत्तम्।

एवं कृतिरेवोच्यते काव्यमिति कविशब्दस्य यथा यथा विशेषपरता, तथा तथैव काव्यशब्दस्यापि, इति नेदं विशेषवक्तव्यमपेक्षते। ईश्वरदेवतादिसाम-र्थ्यबोधकं, ईश्वररचितशब्दार्थमयप्रपञ्चबोधकं, वेदमन्त्रबोधकं, रामायणादिबोध-कश्चायमपि शब्दः क्रमेण तथा दुर्दशामापद्यत यथा—'काव्यालापांश्च वर्जयेत्' इति निषेधविषयताऽस्य शिरसि पतिता। 'काव्यमिदम्' इति वाक्यस्याभिप्राय एवेदानीमयमेव प्रकाशीभवति यत् सत्याद्दूरमपेतं कस्यचिद्विषयस्य व्यक्तिविशेषस्य वा प्रशंसामात्रमिदमिति। भवतु यद् भूतम्। न विवेचकास्तत्र प्रभवः। अस्मा-भिस्तु शब्दशक्तेः क्रम एवालोच्य।

## काव्यलक्षणानि

यत प्रभृत्यलङ्कारशास्त्रस्य साहित्यापरपर्यायस्य प्राकट्यम्, प्रचार उन्नतिर्वा, तत एव कालादपरोऽपि विशेषोऽत्र शब्दार्थे सन्निविष्टः, क्रमेण दार्ढ्यं गतश्च यन्न केवलं योजिता शब्दा एव काव्यम्, अपि तु यच्छ्रवणादनुसन्धानाद्वा सम्पन्नमात्रस्य हृदि काचिच्चमत्कृतिरुदेति, रसालङ्कारजनकतापरपर्यायसौन्दर्यपूर्णं वर्णनं काव्यमिति।

यद्यपि शब्दालङ्कारा अर्थालङ्काराश्च वेदमन्त्रेषु, स्मृतिषु पुराणेषु च सर्वत्रैव बाहुल्ये-नोपलभ्यन्ते, लक्षणादिनिरूपणमपि च तेषामग्निपुराणादिषु दृश्यते तथापि क्रमबद्ध-तन्निरूपणेन शास्त्रत्वप्रतिष्ठापनमस्याऽर्वाचीनम्। यथा यथा च शास्त्रस्यास्योन्नतिरभूत्, तथैव काव्यशब्दार्थबोधके तल्लक्षणेऽपि विविधे प्रकारे सौन्दर्यस्य निवेश आधिक्यमाप। वक्रोक्तिजीवितकारस्य मतमनुसृत्य यदि ब्रूम —तर्हि सरलतया कस्याप्यर्थस्य प्रतिपादनं न काव्यम्। अपितु वक्रोक्त्या *घूर्णनेन कविकुलक्षुण्ण पद्धत्या तत्तदर्थाभिधानमेव सौन्दर्यप्रयोजकम्, तदेव च काव्यमिति। नेदमिदानीं कथयितुमावश्यकम्—यदियं पद्धतिरेव सहृदयेतरैर्जनैरहृदयङ्गमतां काव्यशब्दार्थे मिथ्यात्वमपि प्रावेशयत्। काव्यशब्दार्थं च पदादिभ्यः समकोचयत्।

इदं त्वत्र स्मरणीयं वर्तते—यद् विलुप्तप्रायाप्यर्थशोभनता काव्यशब्दस्याल-ङ्कारिकैरेते पुनरुज्जीविता। पूर्वं किल कृतौ ज्ञाने वै शास्त्रमात्रे निपुणाः कविशब्द-वाच्या अभूवन्। तदीयं कर्म चार्थः शब्दश्चेत्युभयमपि काव्यतया गण्यते स्मेति प्राक् प्रत्यपीपदम्। यदीन्द्रवायग्निसूर्याद्याः कवयः तर्हि तेषां कर्मभूता इमे जागताः पदार्थाः कुतो न काव्यानि स्युः। क्रमेण तु ज्ञाने वैशिष्ट्यम्, शब्दविषया कृति श्चेत्येव कविकाव्यशब्दयोर्गुणप्रधानभावेन वाच्यतयाऽवशिष्टे इति निरूपितं विस्त रेण। तेन शब्दमात्रस्यैव काव्यपदव्यवहार्यताऽवशिष्यते स्म। परमालङ्कारिकैरेकं द्वौ वा विहाय सर्वैरेव काव्यलक्षणेऽर्थस्यापि निवेशं कृत्वार्थस्यापि काव्यपदवाच्यता पुनरुज्जीविता।

यद्यपि—

> 'अपारे काव्यसंसारे कविरेव प्रजापतिः।
> यथास्मै रोचते विश्वं तथैव परिवर्तते॥'

इति चिरन्तनाभियुक्तोक्तिदिशा कविप्रतिभाप्रकल्पिता एवार्थाः काव्यतयाऽ-भिमता आलङ्कारिकाणाम् इति सत्यम्। अन्ये हि प्राकृता अर्थाः तद्विलक्षणाश्चान्य एव कविप्रतिभाप्रकल्पिताः। प्रसिद्धाद्धिमालयाद्विलक्षण एव कालिदासस्य हिमालयः, यत्र दीप्तिमन्त्यौषधानि विद्याधरकामिनीनामतैलपूरा सुरतप्रदीपा भवन्ति। अन्य एव च कालिदासस्य समुद्रो यत्र फेना नक्राणां कर्णचामरतां भजन्ति। अन्य एव कवीनां चन्द्रो यो निशाकामिन्याः कर्णपूरायते, गगनसरसि वा राजहंसायते। प्रसिद्धा हिमालयसमुद्रचन्द्राद्याः कस्यचित्कदाचित्कस्यचिदुद्वेजका अपि स्युः परं कालिदासादीनां हिमालयाद्यास्तु सर्वदैवाह्लादजनका इत्यादि निरूपितमालङ्कारिकैरेव विस्पष्टतया। तथापि 'न ह्यनाधारा कल्पना विजृम्भते' इति मनोविज्ञाननियममाश्रित्य कविप्रतिभाप्रसूतहिमालयादीनामाधारभूतास्तु प्रसिद्धा

* 'घुमाव देकर' इति भाषायाम्।

हिमालयाद्या एवेति तेषामपि परम्परया काव्यशब्दस्पर्शः कथञ्चित्प्रसञ्जित एव। सोऽयं प्राक्तनानामालङ्कारिकाणामर्थरूपे काव्यत्वानुप्रवेशप्रवाहः साहित्यदर्पण-कृता श्रीविश्वनाथकृतिना पुनर्निरुद्धः। स हि 'वाक्यं रसात्मकं काव्यम्' इति वदन् शब्दस्यैव काव्यत्वं व्यवस्थापयत्। किन्त्विदम्—यच्छब्दमात्रस्यैव काव्यत्वमुप-गच्छतापि तेन दृश्यं श्रव्यं चेत्युभयविधं काव्यं स्वीकृतम्। शब्दस्य दृश्यता कथं भवदिति स एव महामतिः प्रष्टव्यः स्यात्। युज्यतां वा अष्टादशभाषावारविला-सिनीभुजङ्गस्य तस्य चक्षुःश्रवस्त्वादन्यस्यापि चानुपततया दृश्यता, परं यदर्थं लक्षणं रचितं तेषां साधारणानां मनुष्याणां तु नैतद्घटेत।

न चार्थद्वारकं शब्दानां दृश्यत्वमिति शक्यं समाधातुम् श्रव्यकाव्येष्वपि प्रसक्तेः। 'अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः' इत्यादीनां श्रव्यकाव्यानामर्थाः किन्तु दृश्या न भवन्ति? तस्माद्यत्र कविगतिभावनिवेशितास्ते तेऽर्था अभिनीताः प्रत्यक्षतामापद्यन्ते तदेव दृश्यं काव्यं मन्तव्यमिति अर्थानां काव्यत्वानुप्रवेशमन्तरेण नैतद्युज्येत वक्तुम्। तथैवात्र लक्षणे रसात्मकताया काव्यत्वप्रयोजकताया तेन महाभागेनात्यर्थमाग्रहः कृतः। अग्रे तु काव्यप्रकाशादी-ननुकुर्वता वस्त्वलङ्कारादिप्राधान्याप्राधान्यादिकृता ध्वनिगुणीभूतव्यङ्ग्यादिभेदा-स्तथैव निरूपिता इत्यपि वैचित्र्यम्। काव्ये प्रधानं वस्तु, अलङ्कारो वा आत्मा तु तत्र रस एवेति कस्तावदनुन्मत्त एतदभ्युपगच्छतु? दुर्दैववशाद्दास्यमनुभवद्रा-जकलत्रमिव कश्चिद्रसोऽपि परायत्ततामापद्यते इत्यादिसमाधानानि तत्र तत्र दृश्यन्ते, परं तथात्वे आत्मत्वमपि रसस्य कथं प्रत्यभिज्ञायेत? न हि राजकलत्रं तदात्वे स्वोचितकर्मप्रयोजकं भवति। यदात्मा, न परं प्रति गुणीभूतः। यदि स गुणीभूतस्तर्हि नात्मेति उभयतःपाशेयं रज्जुः। एवमेवापातरमणीया बहवो विचारा दर्पणे प्रतिभासन्ते। उपयुक्तमेव च दर्पणस्य भ्रान्तिप्रयोजकत्वमित्यास्ता-मप्रकृतचर्चा।

अशेषदेशसुधीसम्मान्येन पण्डितराजेत्यन्वर्थोपाधिधारिणा श्रीजगन्नाथमिश्रेणापि शब्दमात्रस्य काव्यत्वस्वीकारे विश्वनाथ एवानुसृत इति तु परमाश्चर्यम्। नास्य थेषु काव्यशब्दव्यवहार इत्येव पण्डितराजस्य प्रधानतमा युक्तिः। अन्ये कालिदासा-द्युक्ता व्यवहाराः (येऽस्माभिः पूर्वमुपदर्शिताः) न तस्य दृष्टिपथमनुप्राप्ताः। 'दृश्यं काव्यम्' इति क्वचिदपि व्यवहारस्तेन गौण इत्युपेक्षितः। लोके दृश्यमाना नदीपर्वताद्या काव्यशब्देन नाभिलप्यन्त इदानीमिति सत्यम्, परं कविप्रतिभाप्र-कल्पितानामर्थानां काव्यत्वे को विवाद इति कविमूर्धन्येनापि तेन नालोचितं हन्त! या तु काव्यप्रकाशं दूषयता तेन 'काव्यं श्रुतमर्थो न ज्ञातः' इति व्यवहारानुपप-त्तिरुद्भाविता, सा स्वपक्षेऽपि समानेति व्यक्तमस्माभिः खण्डितेव। 'रमणीयार्थप्रतिपादकः शब्दः श्रुतः, अर्थस्तु न ज्ञातः' इति वक्ति। अपि समुचितोऽयं व्यवहारः? शब्द

स्वार्थो न लुप्यते, तदीयमर्थप्रतिपादकत्वम् तत्तेनार्थे रामणीयकं च लुप्यते—इत्यहो वैदग्ध्यम्॥ ततश्च कार्त्स्न्येन काव्यपदार्थमविदुषामिमे गौणा व्यवहारा इति न तदनुसरणेन कस्यचित् काव्यलक्षणं दूषयितुमुचितम्।

यदपि च 'एको न द्वौ' इत्यादिवत् काव्यत्वस्य व्यासज्यवृत्तित्वे 'श्लोकवाक्यं न काव्यम्' इत्यप्यापद्येतेति नव्यनैयायिकपद्धतिमनुसरता तेनोट्टङ्कितम्, तदपि काव्यपदस्य खण्डशः शक्तिमुररीकुर्वता 'क्वचिदर्थविशिष्टः शब्दः काव्यम् क्वचिच्च शब्दविशिष्टोऽर्थः काव्यमिति' श्रीमम्मटाचार्येणैव स्वग्रन्थेऽनेकधा समाहितम्।

अहो प्रसक्तानुप्रसक्तया वयं दूरं धाविताः स्म। अर्थस्य काव्यत्वमालङ्कारिककालेऽपि व्यवहारपथमागतं पुनर्विलुप्तं चेत्येव प्रकृतवक्तव्यमस्माकम्। इदानीं वाग्वैदग्ध्यप्रधानाः शब्दविशेषा एव काव्यपदव्यवहार्या इति निष्कर्षः।

इदं तु पुनरपि निदर्शयितुमावश्यकम्—यदेवसौन्दर्यस्य वाग्वैदग्ध्यप्राधान्यस्य रसात्मकताया अपि वा काव्यशास्त्रीयानुप्रवेशोऽपि वेदादीनां काव्यत्वं पुनरप्यप्रतिहतमेव। सर्वथा वेदादिषु सम्यक् समन्वितत्वात्।

> अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम्।
> जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः॥
>
> ( ऋ० १।१२४।७ )
>
> क्षत्राय त्वं श्रवसे त्वं महीया इष्टये त्वमर्थमिव त्वमित्यै।
> विसदृशा जीविताभिप्रचक्ष उषा अजीगर्भुवनानि विश्वा॥
>
> ( द्यावापृथिवी ) ( ऋ० १।१०६।६ )
>
> उर्वी सद्मनी बृहती ऋतेन हुवे देवानामवसा जनित्री।
> दधाते ये अमृतं सुप्रतीके द्यावा रक्षतं पृथिवी नो अभ्वात्॥
>
> ( ऋ० १।१९५।४ )
>
> चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य।
> त्रिधा बद्धो वृषभो रोरवीति महो देवो मर्त्याँ आविवेश॥
> उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम्।
> उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः॥

इत्यादिषु परःसहस्रेषु मन्त्रेषु केन वा सहृदयेन नानुभूयते वाग्वैदग्ध्यप्राधान्यम्। न केवलं विनोदावहा एवार्था अपि गूढविज्ञानगर्भिता अप्यर्था मन्त्रेषु वाग्वैदग्ध्येन रोचकतां नीयन्ते—

> 'कृष्णं निधानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति।
> त आववृत्रन्त्सदनादृतस्यादिद् घृतेन पृथिवी व्युद्यते॥' [ऋ०]

शुष्कप्रायापि दृष्टिविद्याऽत्र कियद्रोचकत्वं प्रापिता ।

पञ्चारे चक्रे परिवर्तमाने तस्मिन्नातस्थुर्भुवनानि विश्वा ।
तस्य नाक्षस्तप्यते भूरिभारः सनादेव न शीर्यते सनाभिः ॥
[ ऋ० १।१६४।१३ ]

अतिनीरसः खगोलविज्ञानविषयोऽत्र कियत्सारस्यमापादित इति सहृदया एवात्र प्रमाणम् ।

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥

सर्वदुर्बोधं जीवेश्वरविज्ञानमपि कया पद्धत्या सरसतां नीतम् ।

एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे ।
तं पाकेन मनसापश्यमन्तितस्तं माता रेढि स उ रेढि मातरम् ॥

इत्यादिषु च वैज्ञानिकमन्यत्रानायासमनवगम्यं शास्त्राणविज्ञानं नर्मभाषयैवोपनिबद्धम् । वेदेषु प्रभुसम्मित उपदेशः, पुराणादिषु सुहृत्सम्मितः, काव्येषु च कान्तासम्मित इति विभजन्ति आलंकारिकमूर्धन्याः । परं यदि सम्यगालोच्येत, उपदेशप्रक्रियापि वेदेष्वतिसरसा प्रतीयते ।

अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः ॥

किमितः परापि क्वचिज्जागर्ति सुहृत्सम्मितोपदेशप्रक्रिया ?

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः ।
अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या ॥
[ अथ० ३।३०।१ ]

यस्तिष्ठति चरति यश्च वञ्चति यो निलायं चरति यः प्रतङ्कम् ।
द्वौ संनिषद्य यन्मन्त्रयेते राजा तद्वेद वरुणस्तृतीयः ॥
[ अथ० ४।१६।२ ]

इत्यादौ कियन्मनोहरोऽयमुपदेशपद्धतिरित्यालोचयन्तु सुधियः । अथान्यदपि दृश्यताम्—क्षुधितायान्नमन्नस्य दानं धर्मः, न तत्त्वन्यापेक्षयोदासितव्यमितीममभिप्रायं सूक्तमिदं प्रकटयति । तत्र कीदृशी तावदालङ्कारिकी भाषा समुपयुज्यते । अद्यत्वे यद्युपयुक्ता स्यात् छायावादपदमेवास्यै भाषायै प्रदीयेत ।

न वा उ देवाः क्षुधमिद्वधं ददुरुताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यत्युतापृणन् मर्डितारं न विन्दते ॥
[ ऋ० १०।११७ ]

किन्तु प्रथमं व्यतिरेकमुखेनान्नदानं प्रशंसति—देवा वै देवाः खलु सर्वेषां क्षुधं न ददुः न प्रायच्छन्, किन्तु वधमित् वधमेव दत्तवन्त । एतादृशी वचस्या

क्षुधम्, अन्नदानेन य शमयति स दाता खलु उ इति पूरण । य अदत्वा भुङ्क्ते, तम् आधित भुञ्जान पुरुषमपि मृत्यव मरणानि उपगच्छन्ति समीपे यान्ति । क्षुधार्ताना मोक्तृणा च मरण समान किं दानेन धनतादरूपेण, अत आह उतो उतशब्दश्चार्थे, पृणत प्रयच्छत पुरुषस्य रयि धन नो पदस्यति न उपक्षीयते । दानप्रसङ्गेनादातार दूषयति—अपृणन् अप्रयच्छन् पुरुषस्तु मर्डितारम्—आत्मन सुखयितार न विन्दते—न कुत्रापि लभते । इह जन्मन्यदानेन न सुखयन्ति, देवा अपि इति प्रदानाभावात् इति सायणभाष्यम् ।

न स सखा यो न ददाति सख्ये स चाभुवे सचमानाय पित्वः ।
अपास्मात्प्रेयान्न तदोको अस्ति पृणन्तम् यमरण चिदिच्छेत् ॥४॥

व्यतिरेकेण निन्दामाह—स पुरुषः सखा न भवति, य पुरुष सचाभुव सर्वदा सह भवनशीलाय सचमानाय सवमानाय उपसर्जनीभूताय सख्ये सखिभ्र नाय पित्व —पितूनन्नानि न ददाति, न प्रयच्छति स सुहृन्न भवतीत्यर्थ । अस्मा ददात सख्यु ■ अपप्रेयात् अपगच्छेत्, यथेन परित्यज्य गच्छेत्, तर्हि तदोकः निवास नास्ति न भवति, सदन हि बन्धुभिः परिगतम् । ■ मत पुरुष पृणन्तं मन्नादिक प्रयच्छत अन्यमरण चित्, अर्यं स्वामिनमेव इच्छेत् कामयेत । इति भाष्यम् ।

पृणीयादिन्नाधमानाय तव्यान् द्राघीयांसमनुपश्येत पन्थाम् ।
ओ हि वर्तन्ते रथ्येव चक्रान्यमन्यमुपतिष्ठन्त राय ॥ ५ ॥

धनव त पुरुष दाने प्रेरयति—तव्यान् तवीयान् धनैरतिशयात् प्रवृद्ध पुरुष नाधमानाय याचमानायातिथये पृणीयादित् धनानि दद्यादेव । यदि दद्यात् द्राघीयांस दीर्घतम पन्थान सुकृतमार्गमनुपश्येत अनुपश्येत्, पश्यत्येनात्मनेपदम् । तत्र कारणमाह—रायो धनानि ओ हि आ उ आवर्तन्ते खलु, एकत्र न तिष्ठन्ती त्यर्थ । तत्र दृष्टान्त —रथ्येव यथा रथ्यानि रथसम्बन्धीनि चक्राणि उपर्यधोभा वेनावर्तन्ते तद्वत् । आवृत्तिमेव दर्शयति—अन्यमन्य पुरुष धना-युपतिष्ठन्ते समनेतानि भवन्ति । तस्माद्धनानि देयानीति भाव । इति भाष्यम् ।

समौ चिद्धस्तौ न समं विविष्टः सम्मातरा चिन्न समं दुहाते ।
यमयोश्चिन्न समा वीर्याणि ज्ञाती चित्सन्तौ न समं पृणीत ॥

अतिथिभ्यो धनमप्रयच्छन्नपि मम भ्राता दास्यति इति चेत्तत्र हेतुमाह—समौ चिद् हस्तौ समावपि सम समान न विविष्ट कार्ये न व्याप्नुत । तथा सम्मातरा वत्सस्य मातरौ धेनू समे अपि सम समान पयो न दुहाते । यमयोश्चित् सहजातयो पुरुषयोरपि समा समान वीर्याणि न सन्ति, तस्मात् ज्ञाती चित् एक-स्मिन् कुले सन्तौ जातावपि सम न पृणीत न प्रयच्छत । यस्मादस्य धनमस्ति स एव दद्यादित्यर्थ इति भाष्यम् ।

भाषाभेदादृयमत्र तथाविधमानन्दं न विन्दाम इत्यन्यदेतत्। उपदेशप्रक्रियातिरिक्त उत्कृष्टा न काप्युपलभ्यते।

तथैव—

यदिन्द्राहन् प्रथमजामहीनामान्मायिनाममिनाः प्रोत मायाः।
आत्सूर्यं जनयन् द्यामुषासं तादीत्ना शत्रुं न किला विवित्से॥
अयोद्धेव दुर्मद आ हि जुह्वे महावीरं तुविबाधमृजीषम्।
नातारीदस्य समृतिं वधानां सं रुजानाः पिपिष इन्द्रशत्रुः॥
अपादहस्तो अपृतन्यदिन्द्रमास्य वज्रमधि सानौ जघान।
वृष्णो वध्रिः प्रतिमानं बुभूषन् पुरुत्रा वृत्रो अशयद् व्यस्तः॥
नदं न भिन्नममुया शयानं मनो रुहाणा अति यन्त्यापः।
याश्चिद् वृत्रो महिना पर्यतिष्ठत्तासामहिः पत्सुतःशीर्बभूव॥

इत्यादिषु (ऋ० १।२२) इन्द्रवृत्रयुद्धवर्णनशैली तत्र वीररसपरिपोषश्च सहृदयानां मननार्हौ। एवं सौरेषु सूक्तेषु सूर्यवर्णनमाश्विनेष्वश्विवर्णनं पृथिवीवर्णनं च पार्थिवेषु दर्शनार्हम्। न विस्तरभयादिहोदाह्रियते। सौपर्णकाख्यानप्रभृतिष्वाख्यानेषु ब्राह्मणानामपि वर्णनशैली नोपेक्षार्हा। अथ रसात्मकं वाक्यमेव काव्यं ब्रुवन्तोऽपि न मन्त्राणां काव्यत्वं वारयितुमीशते—

इन्द्र आसां नेता बृहस्पतिर्दक्षिणा यज्ञः पुर एतु सोमः।
देवसेनानामभिभञ्जतीनां जयन्तीनां मरुतो यन्त्वग्रम्॥

[यजु० १७ ४०]

इन्द्रस्य वृष्णो वरुणस्य राज्ञ आदित्यानां मरुतां शर्ध उग्रम्।
महामनसां भुवनच्यवानां घोषो देवानां जयतामुदस्थात्॥ (४१)

उद्धर्षय मघवन्नायुधान्युत्सत्वनां मामकानां मनांसि।
उद्वृत्रहन् वाजिनां वाजिनान्युद्रथानां जयतां यन्तु घोषाः॥ (४२)

रथे तिष्ठन्नयति वाजिनः पुरो यत्र यत्र कामयते सुषारथिः।
अभीशूनां महिमानं पनायत मनः पश्चादनु यच्छन्ति रश्मयः॥

[यजु० २९।४३]

सुपर्णं वस्ते मृगो अस्या दन्तो गोभिः संनद्धा पतति प्रसूता।
यत्रा नरः सं च वि च द्रवन्ति तत्रास्मभ्यमिषवः शर्म यंसन्॥

[२९।४८]

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते मनुतां विष्ठितं जगत्।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून्॥

[ऋ० ४ २५।४]

इत्यादिषु किं नास्ति रसविशेषः ? तस्मादृष्टयैव काम कायंता वेदादिषु कव्यत्वम्, नान्य पन्था। भगवान् वाल्मीकिरेव जगत्यादिकविरिति प्रसिद्धिरपि वेदादीन् हृदयतिरोधायैव सूपपादा भवेत्, वेदाना सर्वेदिमूलतायाः सर्वैरङ्गीक्रियमाणत्वात्। 'अहो आम्नायादन्यत्र च्छन्दसामवतार.' [ उ० रा० च० ] इति श्रुवाचेन महाकविना भवभूतिना लौकिक्यां भाषायां छन्दो वाल्मीकमुपक्रममिति आदिकवित्वम् सिद्धिः समाहिता, पर नेदमपि चोदक्षमम्। मन्वादिस्मृतिषु छन्दसा भगवतो वाल्मीकेः प्रागपि लौकिकभाषाया सुस्पष्टमधीयमानत्वात्।

'पुरा सूत्रनिरुद्धान्येवासन् धर्मशास्त्राणि, वर्तमान रूप ▮ मन्वादिस्मृतीनामर्वाचीनमेव' इत्याधुनिकैतिहासिकानामुक्तिरपि नास्मदुक्तामनुपपत्तिं समाधातुमनीषीत, वाल्मीकीये रामायण एव मनुनाम्ना पद्योद्धरणदर्शनात्। मनुस्मृतौ च तत्तत्योपलम्भात्। तथा हि वाल्मीकीये रामायणे किष्किन्धाकाण्डे अष्टादशे सर्गे वालिन प्रति भगवत श्रीरामस्योक्तौ—

> श्रूयते मनुना गीतौ श्लोकौ चारित्रवत्सलौ।
> गृहीतौ धर्मकुशलैस्तथा तच्चरित मया॥ ३०॥
> राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः।
> निर्मला स्वर्गमायान्ति सन्त सुकृतिनो यथा॥ ३१॥
>
> शासनाद्वापि मोक्षाद्वा स्तेन. पापात् प्रमुच्यते।
> राजा त्वशासन् पापस्य तदवाप्नोति किल्बिषम्॥

श्लोकाविमौ मनुस्मृतेरष्टमेऽध्याये ( ३१८, ३१६ ) किञ्चित्पाठभेदेन दृश्येते। तस्मादुपलभ्यमानैव मनुस्मृतिरादिकाव्याद्वाल्मीकीयाद्रामायणात्प्राचीनेति विवादमुपगन्तव्य स्यात्प्रमाणपरतन्त्रै.। अथ मनुस्मृतेर्वर्णनाशैल्यपि न नाम काव्यत्व न स्पृशति—

> आसीदिद तमोभूतमप्रज्ञातमलक्षणम्।
> अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः॥ [ अ० १।५ ]
>
> तदण्डमभवद्धैम सहस्रांशुसमप्रभम्।
> तस्मिञ्जज्ञे स्वय ब्रह्मा सर्वलोकपितामहः॥ [ १।९ ]
> आपो नारा इति प्रोक्ता आपो वै नरसूनव।
> ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः॥ [ १।१० ]
> यथर्तुलिङ्गान्यृतव स्वयमेवर्तुपर्यये।
> स्वानि स्वान्यभिपद्यन्ते तथा कर्माणि देहिनः॥ [ १।३० ]
> यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकस।
> कव्यानि चैव पितर किं भूतमधिक तत॥ [ १।९५ ]

विद्ययैव समं कामं मर्तव्यं ब्रह्मवादिना ।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ [ २।११३ ]
विद्या ब्राह्मणमेत्याह शेवधिस्तेऽस्मि रक्ष माम् ।
असूयकाय मां मा दास्तथा स्यां वीर्यवत्तमा ॥ [ २।११४ ]
यथा काष्ठमयो हस्ती यथा चर्ममयो मृग ।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति ॥ [ २।१५७ ]
जामयो यानि गेहानि शपन्त्यप्रतिपूजिता ।
तानि कृत्याहतानीव विनश्यन्ति समन्तत ॥ [ ३।५८ ]
ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् ।
मृतं तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते ।
सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥ [ ४।५०६ ]
यथा प्लवेनौपलेन निमज्जत्युदके तरन् ।
तथा निमज्जतोऽधस्तादज्ञौ दातृप्रतीच्छकौ ॥ [ ४।१९४ ]
नामुत्र हि सहायार्थं पिता माता च तिष्ठत ।
न पुत्रदारा न ज्ञातिर्धर्मस्तिष्ठति केवल ॥ [ ४।२३९ ]
मृतं शरीरमुत्सृज्य काष्ठलोष्टसमं क्षितौ ।
विमुखा बान्धवा यान्ति धर्मस्तमनुगच्छति ॥ [ ४।२४१ ]

इत्यादिषु शतशः श्लोकेषु उक्तिवैचित्र्यापरपर्यायस्य सौन्दर्यस्य सहृदयहृदयैश्च सुस्पष्टमनुभूयमानत्वात्। तस्मात् 'प्राधान्येन व्यपदेशा भवन्ती'ति न्यायेन यत्र सौन्दर्यात्मकं वर्णनमभिलक्ष्यैव ग्रन्थकृतां प्रवृत्तिः, त एव ग्रन्था काव्यत्वेन प्रसिद्धिं गता, तेषु चाद्यं वाल्मीकीयं रामायणमिति भगवान् वाल्मीकिरादिकविराख्यायते। तदनन्तरं तु कालिदासाद्याः सहस्रशः कवयोऽस्याः पद्धतेः परिष्कारका प्रादुरभवन्निति विदन्त्येव विद्वांसः ।

सोऽयं काव्यप्रवाहः कालेन भारते तथाविधः प्रसृतः, येन शास्त्रान्तराणि कलान्तराणि च स्वान्तर्निमज्जितानि नाद्याप्युन्मज्जन्ति । 'छान्दसाः श्लोकशत्रवः' इति वेदाध्ययनं दूरीकृतम्। 'व्याकरणकण्टकानि ये बहु पश्यन्ति ते भवन्त्यन्धाः' इति व्याकरणबोधोऽधिक्षिप्तः, 'अविदितसुखदुःखं निर्गुणं वस्तु किञ्चिद् जडमतिरिह कश्चिन्मोक्ष इत्याचचक्षे' इति दार्शनिका वाग्भिः सत्कृताः । सर्वथा काव्यमेवैकं शास्त्रम्, कवय एव देशोद्धारका विद्वांसः, राजसभासु कवय एवोच्चैरुपविशन्ति स्म। कवीन्द्राणामेवाङ्गणभुवः 'कन्दर्पक्षाशङ्काकुलकरिमदामोदमधुराः' अभूवन्। अन्ये तु विद्वांसः कवीनेवोपजीव्य निर्वहन्ति जीवनमिति महान्तं कालं भारतस्य वर्षस्य स्थितिरासीत्। 'श्लोकं रचयितुं न जानाति' 'नास्त्येवाक्षरमूल्यं' इति

रात्र द्विवेदिसी नर्वदिश्यपि देशे प्रवृत्ता। ये वराका सर्वथा 'कवित्वबीजभूतसंस्कार लेशशून्या, ते वर 'कुर्वेऽहन्तु यथामति' 'शुद्धा शुय्यां करोम्यहम्' इत्यादि रचयन्त परमन्ततो मङ्गल तु पद्येन कर्तव्यमेवेति न्यायात्यस्यैवाय प्रवृत्त सार्व त्रिको नियम। दर्शनम्, ज्योतिषम्, आयुर्वेद, कोश, व्याकरणमपि चेति सर्वं पद्यबद्धमेवाऽऽसनममूत्। पद्यैरल्पाक्षरैरेव बद्धेव विषया पुर स्थापयितु शक्यन्ते इति सत्यम्, पर पद्यबद्धा शास्त्रीया विषया दुरूहा अर्थेऽणा बभूवुरपि भवन्तीत्यपि नाऽसत्यम्। इत एव प्रव हास्यग्रन्थाधिगमे, संस्कृताश्लेष दवाति काठिन्य प्रसूनमित्यास्तामप्रकृता कथा। काव्यान्यपि तावन्ति निर्मितानि भारते, यत्प्रत्येक यन्नाल्ये, समितिभि, सरथानि, मातिर्वै पत्रेश्च सहस्रश का यानि प्रकाशितानि, प्रकाश्यन्ते च, परमद्यापि सहस्रश एव सन्ति प्रकाशनापेक्षीणि, नाऽद्यैवैवामन्त। अहो भारतीयाना प्रतिभावैचित्र्यम्। अहो प्रवाहप्रसरणम्। य प्रवाहोऽत्र प्रसृत, ■ एवमेवानन्तकालगरायित। सत्यमिय सर्वोत्तो विधाना कल्पना च प्ररोहाय्यानिशयितोर्वरा भूमि।

अथ कालक्रमेण ह्रासमुपेयुषि संस्कृतवाङ्मयमार्त्तण्डे, समुदयमाप्नुवति च प्राकृतापभ्रंशादिप्रभृतिदृढिमार्जितकरे, सोय काव्यप्रवाह उदीयमानाभिमुख एव सुप्रवृत्तोऽभूत्। तथापि काव्यानामतिनमा बाहुल्यमनुभूयते।

संस्कृते तु वहो कालादनन्तर कविताप्रवाह प्रवृत्त इति तत प्राकृता गद्य ग्रन्था अपि बाहुल्येनोपलभ्यन्ते, परमपभ्रंशादिभाषाणान्तु जन्मैव कवितापरत्र काल इति तत्र तु गद्यग्रन्थानामतीव विरलता दृश्यते। सर्वमपि विषयजात तत्र पद्यनिबद्धमेव। हरम्भनूकाल काव्यमेव सकलकलामौलिचूडितमिति सुसम्पद्यन्मानप्रचा-लित हिन्दीभाषादिवाङ्मयदर्शनेनानुमीयते। प्राकृतम्, अपभ्रंश, तत्प्रातता ब्रजभाषा हिन्दीभाषायाश्चेत्यादि सर्वमपि प्राचीन वाङ्मय संस्कृतवाङ्मयोदितनव पन्थानमनुससाररवत ■ नास्ति स्तोकोऽपि संशय। संस्कृतमेव तदानीमध्ययनभाषा ऽभवत्, य कोऽपि किमप्यध्येतुमैच्छत्, तस्य संस्कृतमेव सानाधीन्तरणम्। प्राकृता पभ्रंशब्रजभाषादिमहाकवयोऽपि संस्कृतेऽधीतिन एव। तथा च संस्कृतमधीत्य संस्कृ तानुसरण तेषा प्रकृतिसिद्धमेवाभूत्। आस्ता विषयस्य तकथा, संस्कृतशब्दा अपि ताभ्र ब्ध्रुति स्म। तत एव प्राकृतापभ्रंशादिक्रमेण विकृतिमासाद्य शब्दानुपेदव संस्कृत-शब्दा एव ब्रजभाषाकविभिर्भूयो भूय परिगृहीता इति विस्तरेण दहाभियुक्तैरभि प्रत्यपीदं स्वीये हिन्दीभाषानिबन्धे (हिन्दी में संस्कृत शब्दों का ग्रहण) इति शीर्षके। तत न संस्कृता वाक् न केवल हिन्द्यादिभाषाणा मातामही, पितामही वा अपि तु साक्षाज्जनयित्री तेनैव सिद्धान्तितमित्यास्तामप्रकृतम्।

इद ■ विस्मयावहम्—यद् ब्रजभाषादिदेशीयभाषाकविभिरत्र संस्कृतवाङ् मय सर्वात्मनानुसरद्भिरपि छन्दोविषये स्वात पयेवाविष्कृतम्। यानि चन्द्रादेवेनि-

च्छन्दयुक्तानि ( दोहा, चौपाई, सवैया, छप्पय, कुण्डलिया अमृतध्वनि, घनाक्षरी ( कवित्तम् ) प्रभृतीनि न तेषां प्राकृते संस्कृतवाङ्मये क्वापि समुन्मेषः । संस्कृत निबद्धेषु पिङ्गलादिच्छन्दःशास्त्रग्रन्थेष्वपि नैषां प्रायेण लक्षणानि दृश्यन्ते । 'दण्डक' पदेनैवैवंविधानि छन्दांसि व्यवहरन्ति स्म पूर्वाचार्याः । प्राकृतपिङ्गले कथञ्चिल्लक्षणानि प्राप्यन्ते परं प्राकृतेऽपभ्रंशेऽपि च दोहादीनां केषाञ्चिन्मात्राच्छन्दसां व्यवहारेऽपि प्रलम्बच्छन्दसां व्यवहारो न दृष्ट एव । प्रलम्बच्छन्दसां बाहुल्येन प्रथमं प्रयोक्ता तु देशभाषाकृतेः 'पृथ्वीराजरासो' निर्माता चन्दवरदाइत्यभिधो भाटः दृश्यते । तदात्वेऽपभ्रंशादेशीया भाषा उदयमाना आसन् ।

'षड्भाषा पुराण च कुरान कथित मया' इति हि तस्य प्रतिज्ञा । तदनन्तरं तु व्रजभाषायां प्रलम्बच्छन्दसामेव व्यवहारप्रवाहः प्रसृतः । घनाक्षरी तु तथा सर्वैरभ्यस्ता यथा तन्नामैव 'कवित्तम्' इति जातम् । तन्निर्माता च कविः, तदेव च तस्य कवित्वमिति ।

वस्तुतस्तु आवश्यकतामनुसृत्योपकरणान्युपादीयन्ते, परिहीयन्ते चेति प्रकृतिसिद्धः सिद्धान्तः । व्रजभाषादिसाहित्यकालो हि 'रीतिकाल' इति परिभाष्यते । तदात्वे हि अलङ्काराणाम्, तत्रापि विशेषेण शब्दालङ्काराणां बाहुल्यमेव जनमनोमोहकमासीत् । राजानः एव कवीनां प्रसादनीया अभवन् । ते च व्यङ्ग्यादिबोधशिथिला वाच्येनैवार्थेनाधिकं तुष्यन्ति स्म । अलङ्काररुचिरं तद्वीर्यवर्णनम्, यशोवर्णनम्, तद्रुचिकरशृङ्गाररसप्लावनं वा कवीनां कर्तव्यकोटौ प्रधानान्यभूवन् । एतदर्थं च कवित्तादीनि प्रलम्बच्छन्दांसि बहूपकारकाणि । घनाक्षरी 'कवित्तम्' नानुप्रासमन्तरेण पदमपि प्रचरति । बन्ध एवास्य च्छन्दसोऽनुप्रासाधीनः । बहुन सवर्णमैत्रीश्रवणसमकालमेव प्राकृतानां चेतस्यानन्दपयोनिधिरुद्वेल्लति । 'भूली सुध सारी री लोकलाज छूटी री अरुझी हिये में फहरानि पीतपट की ।'

इत्यादिश्रवणसमकालमेव शिरो घूर्णयन्ति जनाः ।

'केसरिया पाग पर चन्द्रिका सुहाग पर
कलँगी की लाग पर रतनारी दामरैं
चन्दन की झूम पर मोतिन की लूमपर
अञ्जन घूम पर भौंहन की भाँवरैं ।
जामा फुलकारी पर बनमाला भारी पर
भूषन उजारी पर बैन के बनावरैं
आँखैं अरविंद पर चारमुखचन्द पर
राधिकागुविन्द पर नैनन निछावरैं ॥'

मानस ! मुकुन्दचरणारविन्दलग्नामये !
मौनमभिनन्दयस्व सूक्तिसुन्दरीमिमाम् ॥'

[ गोविन्दवन्दनमन्दारमाला २ ]

समभिनन्द्यतां सशिरःकम्पं सावयवरूपकम्। एकत्रैव बह्वर्थप्रकाशनं प्रलम्बच्छन्दसामसाधारणो गुणः। दृश्यताम्—सर्वापि द्रौपदीकथा एकत्रैव समाहृता कुलपतिमिश्रेण स्वीये संग्रामसारे—( द्रोणपर्वानुवादरूपे )—

'शकुनि दुशासन कर्नसुजोधन पापमन्त्र किय
सभामध्य द्रौपदि हि आनि हठि वस्त्र खैंचि लिय।
किय पाण्डव अपमान बेधि बहु बाक बान उर
हुते सर्वं परवीन किहुन धर्मिय सुधमंधुर।
जदुनाथ नाथ तुव सरन हौं राखि स्याम कृष्णा कहिय।
धट्टेन बसन जिमि कालगति सुनत अन्ध अति भय गहिय॥'

यथा वा तत्रैव सात्यकिभूरिश्रवसोर्युद्धवर्णने—

'लखि सात्यकि बलहीन प्रबल कौरव अद्भुत किय।
सारदूल जिमि एक काण्ड गहि भूमि पर्यकिय।
अरु उरमें दे लात केस गहि लम्बा हाथ लिय
पत्थ! पत्थ! सैनेय मरत हरि हहे सोर किय।
भुजरहित भीव भुजबानहू फेरत कियउ अपुब्ब अति।
निरखै न कष्ट भूरिस्रवा जिमि नर लखै न कालगति॥'

साम्प्रदायिकान्दोलनध्यातेष्वतस्त्वितीयपि व्रजभाषाकवितासु बहुला दृश्यते। तथाप्येकस्मिन्नेवापि भावस्ते च देवताध्यानसमावेशो प्रलम्बच्छन्दसो भूयानुपकारः। यथा मत्पितामहानां श्रीगोपालचतुर्वेदानां गणपतिस्तुतिः—

चर्चित सिंदूर तन अर्चित सुरेश पद
मण्डित कुकुरमौलि सुषमा अपार है
सुकवि गुपाल भालचन्द की छटा है
मद धारा धरा है एकदन्त निरधार है।

अथ मालोपमा—

'कुंभदइनगज्ज रसालमञ्जरी को निज
उन को सुहाग वन्देविन को कन्त है
कोकिला को मोनहर मौन को केलिकर
मञ्जुलमैमारुत को सन्त विरहन्त है।
मानिनीनमायक मनोज को सहायक
संजोगी सुखदायक वियोगी जन अन्त है
चाँदनी को सोधक विरोधक मुनीन मन
रोचक विदेव फूल्यो बागन वसन्त है॥'

'वरनविचार त्यु गुरु लोक लोकन को
साधि सोधि रसना के सुवरन पावर
कर विजही तें चतुराई चाव लेखनि ले
सबद अरथ रङ्ग अङ्गरचनि उजास दर
सरसुति राधिका कुंवरि मबनन्दन के
रूप की मधनि बरसावैं रसराकर
नेह के नगर जग जगर मगर देसे
सुधर सुघर रुन्दी भारती के चितकर॥'

[४०१।२]

अत्र सावधेनं रूपकं च बरन न मनो हरेत्।

यथा वा पद्ये सन्नतपदे—

'स्फटिककिरीट–परिमानतमनावनाङ्गुतां
काचमश्चिकर्णिकाञ्च–चूडामणिकोमलाम्।
उत्क्षेशावतंस–कुल्वयोदितावतनिभृतां
तद्गुणउरग–हेमहारतो मनोरमान्।
स्नेषकरकङ्कण–विरोषवल्यानुगुणां
परिकरकाञ्ची–धारनूपुरगुम्फमान्।

मानस ! मुकुन्दचरणारविन्दलम्नामये !

मौनमभिनन्दयस्व सूक्तिसुन्दरीमिमाम् ॥'

[ गोविन्दवन्दनमन्दारमाला २ ]

समभिनन्द्यतां सधिर कम्प सावयवरूपकम् । एकस्यैव बह्वर्थप्रकाशनं प्रलम्बच्छन्द सामसाधारणो गुण । दृश्यताम्—सर्वापि द्रौपदीकथा एकत्रैव समाहृता कुलपति मिश्रेण स्वीये संग्रामसारे—( द्रोणपर्वानुवादरूपे )—

'सकुनि दुसासन करनसुजोधन पापमन्त्र किय
सभामध्य द्रौपदि हि आनि हठि बसन खेंचि लिय ।
किय पाण्डव अपमान बेधि बहु बाक बान उर
हुते सर्व परवीन किहुन यमिय सुधर्मपुर ।
जदुनाथ नाथ तुव सरन हों राखि लाज कृष्णा कहिय ।
घटैन बसन जिमि कालगति सुनत अन्ध अति भय गहिय ॥'

यथा वा तत्रैव सात्यकिभूरिश्रवसोर्युद्धवर्णने—

'लखि सात्यकि बलहीन प्रबल कौरव अद्भुत किय ।
सारदूल जिमि एव काष्ठ गहि भूमि पटकिय ।
अरु उरमें दे लात केस गहि खग्ग हत्थ लिय
पत्थ ! पत्थ ! सैनेय मरत हरि इहै सोर किय ।
मुखकहित भीर सुबघानहु फेरत कियउ अपुब्ब अवि !
निरखै न कष्ट भूरिश्रवा जिमि नर लखै न कालगति ॥'

साम्प्रदायिकान्दोलनवशाद्दैवतस्तुतिरपि व्रजभाषाकवितासु बहुला दृश्यते । तथाप्येकस्यैवाथिर आनर्त्तं च देवताध्यानसमावेशो प्रलम्बच्छन्दसा भूयानुपकार । यथा मत्प्रपितामहानां श्रीगोपालचतुर्वेदानां गणपतिस्तुति —

चर्चित सिंदूर तन अर्चित सुरेश पद
मण्डित सुकुटमौलि सुषमा अपार है
सुकवि गुपाल भालचन्द की छटा है
मद झरत पग है एकदन्त निरधार है ।

उदर उदार भुज चार रखवार मही
गोद गिरिजा के मन मुदित विहार है
आनन वितुण्डवारे आनँद अखण्डवारे
सुण्डवारे सरस महेशके कुमार हैं॥

इदं तु खलु संस्कृते भाषासम्बन्धे अनितरसाधारणं महत्त्वम्—यत्तत्र समास-प्रयोगेण तद्धितेन कतिपयत्यादिभि, अन्येषामपि सुपां लिङां च तत्तदर्थाभिव्यञ्जकतया स्वल्पाक्षरैरेव महार्थं क्रोडीक्रियते। प्राकृताद्यन्यभाषासु न तत्संभवति। तस्मादत्र तु प्रबन्धानि च्छन्दांस्येव शरणं बह्वर्थसंग्रहाय। एवमादिभिस्तत्कालोपयुक्तैर्गुणैरेषां छन्दसां देशीयभाषाकवितासु प्राधान्येन परिग्रहो ननु न्याय्य एव। तथैव मावत्कविरपि लोकानां प्रवृत्तेति गेयच्छन्दसां पदावलरचनाणामपि प्रवाहो व्रजभाषाकविताधुरेण श्रीसूरदासेन प्रवर्तितः। परतस्तु यवनसंपर्कात्तत्रापि नवनवच्छन्दसां समावेशोऽतीव वृद्धिं गतः।

संस्कृतकवित्वं संस्कृतस्य विरले प्रचारे सायन्तनप्रकाशायितप्रभृदिति न्यवेदयं प्राक्। पण्डितराज एव संस्कृतकवितायां चरमश्चक्रवर्ती। तत. परं न विद्याधर-प्रतिभः कवि' कश्चन प्रादुरभूदित्यस्मद्गुरुचरणैः श्रीलक्ष्मीनाथशास्त्रिमहाभागैः स्वीये भारतेतिवृत्तसारे समुल्लिखितम्। तथापि तु 'न वीरविहीना वसुन्धरा'। भारतभुवि कस्यापि आश्चर्यस्य वस्तुनो विलोपो न जायते। अभूवन्नेव तत्र तत्र देशविशेषे कालविशेषे च प्रतिभाप्रगल्भाः कवयः। महामहोपाध्यायश्रीगङ्गाधरशास्त्रिणा दुःखभञ्जनदेवीप्रसादप्रभृतीनां च क' खलु विशिष्टकवित्वं नाभिमन्येत। बङ्गदेशे दक्षिणदेशेऽप्यपि च प्रादुरभवन् बहव' ख्यातनामानो महाकवयः। जयपुर-नगरेऽपि भट्टश्रीकृष्णरामप्रभृतयः सुप्रसिद्धा कवय' प्रादुरभवन्, येषां सुप्रसिद्धानि काव्यानि प्राक्तनकविभ्यो नापकृष्टानि गणयितुं शक्यन्ते। एवमर्वाचीनेषु कविषु येषां व्रजभाषाकाव्यपरिचयोऽभूत् ते कौतुकवशगाः प्रबन्ध-च्छन्दसां व्यवहारं कचित्कथंचित् संस्कृतेऽपि चक्रुः। पूर्वनिर्दिष्टेन श्रीकृष्ण-रामकविना भाषाप्रसिद्धाः काश्चन गीतयः संस्कृते रचिताः। तत्कालिकैरन्यैरपि कविभिः स्फुटरूपेण तत्र पदं निहितम्।

परं व्रजभाषाप्रसिद्धानि च्छन्दांसि, नवशैलीनिबद्धा गीतयश्चानुप्रासबाहुल्य मन्तरेण न सौष्ठवं दधत इति तु प्राङ्न्यवेदयम् । देशीयभाषाकवीनां शब्दत्रोटने मोटने च स्वातन्त्र्यात्तैरनुप्रासा निबध्यन्ते । संस्कृतभाषा तु व्याकरणसूत्रबद्धेति नात्र शब्दस्वरूपपरिवर्तने मनागपि कवीनामधिकार । अन्यत्र दृष्टस्याऽन्यत्र प्रयोगेऽपि 'निरङ्कुशा कवय ' इति वैयाकरणास्तान् कदर्थयन्ति । तस्मादत्र तादृशबन्ध निर्वहणमतिकठिनमिति न संस्कृते तादृशच्छन्दसां प्रवाहोऽद्यावधि समुच्छलितः । तदित्थं कविकाव्यविषये दिङ्मात्रं प्रकाशिता विचारा ।

इति चतुर्वेदिसंस्कृतरचनावल्यां महामहोपाध्यायश्रीगिरिधरशर्म-
चतुर्वेदानां भारतराष्ट्रपतिसम्मानितानां संस्कृत
निबन्धानां मञ्जूषायमाणायाः
प्रथमो भागः समाप्त. ।

